क्रियते । आहवनीयस्थानापन्नत्वादुख्याग्नेरपि नित्यधारणं प्राप्तमिति । अतो नित्यधारणविधेरभावान्न विकल्पः । कार्याभावाच्चाधारणमेव तस्येति भावः॥ ३१॥

**सत्राहीनयोरनेकयजमानसमवाये शुक्रस्पर्शादीनामेकयजमानकर्तृकत्वाधिकरणम् ॥ ११ ॥**

## सि० ॥ परार्थान्येको यजमानगणे ॥ ३२ ॥

सत्राहीनयोः सर्वेषां यजमानत्वात् 'शुक्रं यजमानोऽन्वारभते । 'यजमानसंमितौदुंबरी भवति' इति यानि **परार्थानि**—यजमानानुपकाराणि कर्माणि तानि **यजमानगणे** एक एव कुर्यात् । न सर्वे । सर्वेषां प्रवृत्तौ प्रयोजनाभावादिति भावः ॥ ३२ ॥

**अहीने शुक्रस्पर्शादावनियतयजमानकर्तृकत्वाधिकरणम् ॥ १२ ॥**

## सि० ॥ अनियमोऽविशेषात् ॥ ३३ ॥

अहीने—एकेन यत् कार्यं तत् **अविशेषात्**— विशेषस्याभावात् **अनियमः**--येन केनापि कार्यमित्यर्थः ॥ ३३ ॥

**सत्रे शुक्रस्पर्शादौ गृहपतेरेव कर्तृत्वाधिकरणम् ॥ १३ ॥**

## सि० ॥ मुख्यो वा अविप्रतिषेधात् ॥ ३४ ॥

सत्रे तु **मुख्यः** गृहपतिरेव याजमानं कुर्यात् । **अविप्रतिषेधात्**-प्रतिषेधस्याभावादित्यर्थः ॥ ३४ ॥

**सत्रे यजमानसंस्काराणामञ्जनादीनां सर्वगामिताधिकरणम् ॥ १४ ॥**

## सत्रे गृहपतिरसंयोगात् हौत्रवत् ॥ ३५ ॥

सत्रे अञ्जनाभ्यञ्जनप्रभृतयः संस्काराः गृहपतेरेव, उत सर्वेषामिति संशये गृहपतिः यजमान एव फलभूयस्त्वादिवैशिष्ट्यवानुक्तसंस्कारसंस्कृतः स्यात् । न सर्वे स्युः । कुतः ? असंयोगात्- 'गृहपतिं दीक्षयति' इति वाक्यस्थ गृहपतिपदे **असंयोगस्य**—संयोगाभावस्यासत्वात्सम्बन्धाभावाभावस्य-- शक्तिरूपसम्बन्धस्य विद्यमानत्वात । सः गृहपतिशब्दस्य शक्त्याख्यः सम्बन्धः अबाधितः स्यात् । **हौत्रवत्**- यथा होतृशब्दशक्तेरबाधाय होत्रा क्रियमाण

कर्मण्येव हौत्रपदस्य प्रयोगः, तथाऽत्रापीति। अन्यथा सम्बन्धो बाधितः स्यात्त-दयुक्तमिति ॥ ३५ ॥

## आम्नायवचनाच्च ॥ ३६ ॥

' यो वै सत्रे बहूनां यजमानानां गृहपतिः स सत्रस्य प्रत्येता, स हि भूयिष्ठां ऋद्धिमाप्नोति ' इत्याम्नायवचनादपि विशिष्टो यजमान एव गृहपतिरिति सिध्यति ॥ ३६ ॥

## सि० ॥ सर्वे वा तदर्थत्वात् ॥ ३७ ॥

' ऋद्धिकामाः सत्रमासीरन् ' ' द्वादशाहं ऋद्धिकामाः सत्रमुपेयुः ' 'सप्तदशावरा एकविंशतिपरमाः सत्रमासीरन् ' इत्यादिश्रुतिभिः **तदर्थत्वात्**--सर्वार्थत्वात्-सर्वेषां ऋध्यादिफलार्थत्वबोधनात् सर्वे एवाञ्जनादिसंस्कारैः संस्कार्याः । न गृहपतिरेक एवेति भावः ॥ ३७ ॥

## गृहपतिरिति च समाख्या सामान्यात् ॥ ३८ ॥

गृहपतिरिति समाख्या तु **सामान्यात्**--सर्वसाधारण्यादुपपन्ना । **गृहस्य**— शालायाः मखस्य वा प्रभुत्वं सर्वसाधारणमिति शक्यार्थबाधाभाव इत्याशयः ॥ ३८ ॥

## विप्रतिषेधे परम् ॥ ३९ ॥

याजमानाऽऽर्त्विज्ययोर्विप्रतिषेधे— विरोधे **परं**— आर्त्विज्यं-ऋत्विक्कर्म एव कार्यम् । कुतः ? ' यजमानास्ते ऋत्विजः ' इत्यनेन वाक्येन ऋत्विक्कर्मणः आतिदेशिकयाजमानापेक्षया प्रबलत्वबोधनादिति भावः ॥३९॥

## हौत्रे परार्थत्वात् ॥४० ॥

**हौत्रे** कर्मणि होतुः **परार्थत्वात्**— कर्मार्थत्वात् कर्म प्रधानम् । होता तत्र गुणभूतः । अत एकेनापि कर्तुं तच्चरितार्थम् । अभ्यञ्जनं फल-संस्कारः । तत्र यजमानः प्रधानम् । अतः प्रधानसंस्कारावृत्तिरिति सर्वे तत्संस्कारेण संस्कार्या इति भावः ॥ ४० ॥

## वचनं परम् ॥ ४१ ॥

यच्च फलभूयस्त्ववचनमुपन्यस्तम्। तत् **परं**—अर्थवाद इत्यर्थः ॥४१॥

### ब्राह्मणस्यैव आर्त्विज्ये अधिकाराधिकरणम् ॥ १५ ॥

## प्रभुत्वादार्त्विज्यं सर्ववर्णानां स्यात् ॥ ४२ ॥

**आर्त्विज्यं**--ऋत्विक्त्वं, **सर्ववर्णानां**—ब्राह्मणक्षत्रवैश्यानामुपनयनोत्तरमधीतवेदानां विद्यावत्त्वेन **प्रभुत्वात्**—सामर्थ्यवत्त्वात् स्यात् ॥ ४२ ॥

## सि० ॥ स्मृतेर्वा स्याद् ब्राह्मणानाम् ॥ ४३ ॥

'प्रतिग्रहोऽधिको विप्रे' इत्यादिस्मृतेः 'याजनाध्यापनप्रतिग्रहाः ब्राह्मणस्यैव वृत्त्युपायाः' इति कल्पसूत्राच्च ब्राह्मणस्यैवाऽऽर्त्विज्येऽधिकारः। नेतरयोः ॥ ४३ ॥

## फलचमसविधानाच्चेतरेषाम् ॥ ४४ ॥

'यदि राजन्यं वैश्यं वा याजयेत्, स यदि सोमं विभक्षयिषेत, न्यग्रोधास्तिभिर्नाराहृत्य ताः सम्पिष्य दधन्युन्मृज्य तमस्मै भक्षं प्रयच्छेन्न सोमम्' इति सोमपानस्य तयोः प्रति निषेधात् ऋत्विजां सोमपानावश्यकत्वान्नार्त्विज्यमितरयोः ॥ ४४ ॥

## सान्नाय्येऽप्येवं प्रतिषेधः सोमपीथहेतुत्वात् ॥ ४५ ॥

एवं सान्नाय्ये च 'न राजन्यो न वैश्यो वा सान्नाय्यं पिबेत, असोमपीथी ह्येतः' इति सान्नाय्यपाननिषेधहेतुत्वेन सोमपानानर्हत्वं श्रुतिर्दर्शयति। अतोऽपि नाऽऽर्त्विज्यं तयोरित्यर्थः ॥ ४५ ॥

## चतुर्धाकरणे च निर्देशात् ॥ ४६ ॥

दर्शपूर्णमासयोः पुरोडाशस्य ऋत्विक्कर्तृकशेषभक्षणे 'ब्राह्मणानामिदं हविः सोमपीथिनां नेहाब्राह्मणस्यास्तीति' श्रुतेः यदि राजन्यवैश्ययोरपि ऋत्विक्त्वं स्यात् तर्हि ब्राह्मणानामेव सोमपीथिनामिदं शेषभक्षणहविः, नेह अब्राह्मणस्य

सक्तिरिति श्रुतिर्नाविक्ष्यत् । ब्रवीति च ब्राह्मणानामेवेति । अतोऽपि भ तयोरार्त्विज्यमिति भावः ॥ ४६ ॥

## अन्वाहार्ये च दर्शनात् ॥ ४७ ॥

'एते वै देवा अहुतादो यद् ब्राह्मणाः यदन्वाहार्यमाहरन्ति । तानेव तेन प्रीणाति ' इति दार्शपूर्णमासक्यामन्वाहार्यदक्षिणायां ब्राह्मणा एव दृश्यन्ते। दक्षिणा च ऋत्विग्भ्य एव दीयते। तस्मादुक्तेभ्यः श्रुत्युक्तहेतुभ्यः स्मृतिभ्यश्च शिष्टाचाराच्च ब्राह्मणानामेव आर्त्विज्यम्। नेतरयोरिति निष्कृष्टः सिद्धान्तः ॥४७॥

इति पूर्वमीमांसासूत्रवृत्तौ भावबोधिन्यां द्वादशाध्यायस्य चतुर्थः पादः ॥ ४ ॥ श्रीः ॥

सम्पूर्णश्च द्वादशोऽध्यायः।

---

## ॥ श्रीः ॥

यदीयसम्बन्धमवाप्य पावनम्
अहं कृतार्थोऽस्मि विशुद्धचेताः ।
भवाब्धिसन्तारितशिष्यवृन्दम्
प्रणौमि तद्देशिकपादपङ्कजम् ॥
कृष्णासरित्तीरपूतवेणग्रामनिवासिना ।
पूर्वजार्जिततत्रत्यावनिस्थानाल्पवृत्तिना ॥
मारुलकरेत्यन्ववायनाम्ना नृहरिशर्मणा ।
अधीततर्कमीमांसाद्वयश्रीरङ्गनाथिना ॥
नागेषुवास्वन्दुमिते (१८५९) शाके ईश्वरवत्सरे ।
जगद्गुरुश्रीशङ्करार्यपदपद्म विभूषितम् ॥
करवीरलसत्पीठं वन्द्यं समधितिष्ठता ।
विद्याशङ्करभारतीत्याह्वेन यतिना मया ॥

इन्द्वश्ववस्विन्दुमिते (१८७१) विरोधिवत्सरे शुभे ।
प्रौष्ठपद्यां पूर्णिमायां वासरे सौम्यसंज्ञके ॥
सौत्रप्रत्येपदस्यार्थमादावुक्त्वा ततः परम् ।
भावार्थो वर्णितो यस्यां सूत्रकृदृषिसंमतः ॥
ईदृग्विधा सूत्रवृत्तिः प्रणीता भावबोधिनी ।
सलीलं श्रौतधर्मस्य मुन्युक्तार्थप्रकाशिका ॥
सेयमीशप्रसादेन आस्तीकजनतुष्टये ।
चिरं समर्था सम्भूयादित्याऽऽशंसेऽहमादरात् ॥

॥ श्रीः ॥

आदौ धर्मे प्रमाणं विविधविधिभिदां शेषतां च प्रयुक्तिम्
पौर्वापर्याधिकारौ तदनु बहुविधं चातिदेशं तथोहम् ॥
बाधं तंत्रं प्रसङ्गं नयनयनशतैः सम्यगालोचयद्भ्यो
भिन्ना मीमांसकेभ्यो विदधति भुवि के सादरं वेदरक्षाम् ॥

श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमज्जगद्गुरुशङ्कराचार्यान्वयसञ्जाताभिनवपञ्चगङ्गातीरवास-कमलानिकेतन— करवीरसिंहासनाधीश्वर-श्रीविद्याशङ्करभारतीस्वामिपादप्रणीता भावबोधिनीसमाख्या श्रीमज्जैमिनीयसूत्रवृत्तिः समाप्तिमगात् ।

---

धार्मिक-विमर्शसमुच्चयः ( प्रथमो विभागः )
श्रीमज्जगद्गु[illegible] पीठ करवीर
( [illegible]प्रणीतः )
प्रकाशकः आनन्दाश्रम पुणें.

| | | | |
|---|---|---|---|
| १ | नारायणीयधर्म व गीतातात्पर्य-निर्णय | ( प्राकृत ) | ०-१२-० |
| २ | श्रीमद्भगवद्गीता ( ज्ञान-योग-शास्त्र ) | ,, | १-४-० |
| ३ | शाश्वतकोशः | | १-८-० |
| ४ | श्रीचण्डिकोपास्तिदीपिका ( सप्तशतीटीका ) | | ३-०-० |
| ५ | बालबोधरामायणम् | | ०-५-० |
| ६ | श्रीमच्छंकराचार्यस्तुतिस्तोत्रारविन्दयुगुलम् | | ०-१-० |
| ७ | श्रीमज्जगद्गुरु आद्य शंकराचार्य यांचें श्लोकबध्द संक्षिप्त चरित्र | ( प्राकृत ) | ०-२-० |
| ८ | धार्मिकविमर्शसमुच्चयः ( द्वितीयो विभागः ) | | ५-०-० |
| [illegible] | वेदाचें अपौरुषेयत्व | ( प्राकृत ) | ०-१२-० |
| १० | अमृतस्रोत ( बालस्वामीकृत ) | ,, | ०-४-० |
| ११ | द्वैतखण्डनम् ( श्रीमत्स्वयंप्रकाश यति ) | | २-०-० |
| १२ | पूर्वमीमांसासूत्रवृत्तिः ( भावबोधिनी ) | | १०-८-० |

हीं पुस्तकें खालील पत्त्यावर मिळतील.

स. न. मारुलकर, काव्यतीर्थ "
ग्रंथालयाध्यक्ष,
श्रीमज्जगद्गुरु शंकराचार्य पीठ करवीर